TRIVANDRUM SANSKRIT SERIES.

No. CII.

Śrī Setu Lakṣmī Prasādamālā.

No. XIV.



# दत्तिलम्

# DATTILA

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ,

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS. 1930

TRIVANDRUM SANSKRIT SERIES.

No. CII.

Śrī Setu Lakṣmī Prasādamālā.

No. XIV.

# THE DATTILA

OF

## DATTILAMUNI

EDITED BY

K. SĀMBAŚIVA ŚĀSTRI,

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1930.

अनन्तशयनसंस्कृतग्रन्थावलिः ।
ग्रन्थाङ्कः १०२.
श्रीसेतुलक्ष्मीप्रसादमाला ।
ग्रन्थाङ्कः १४.

# दत्तिलं

दत्तिलमुनिप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधितम् ।

तच्च
अनन्तशयने
महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः ११०५, क्रैस्ताब्दाः १९३०.

॥ श्रीः ॥

श्रीपद्मनाभसेवि-
 न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
 प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
 प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
 प्रसादमाला सुवर्णमणिचित्रा ॥

# PREFACE.

The introductory and concluding lines,

"गान्धर्वशास्त्रसंक्षेपः सारतोऽयं मयोच्यते ।" (p. 1),
"अकरोद् दत्तिलः शास्त्रं गीतं दत्तिलसंज्ञितम् ।" (p. 24)

of the work now published show that it is named Dattila by Dattila Muni and that its subject matter is the essence of the science of music. This Dattila Muni may be the same as Dattila mentioned by Bharata in his Nāṭyaśāstra,

"पुत्रानध्यापयामास प्रयोगं चापि तत्त्वतः ।
शाण्डिल्यं चैव वात्स्यं च कोहलं दत्तिलं तथा ॥" (1-26)

as one of the Bharataputras whom he taught the theory and practice of music.

Dattila was earlier than Mataṅga who quotes him in his Bṛhaddeśi (Trivandrum Sanskrit Series No. 94) thus:—

"दत्तिलेनाप्युक्तं—
तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात् तथा ।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः ॥" (p. 29)

"तथाचाह दत्तिलः—
एवं कृतेऽपि तानत्वे गणयित्वा विनाशिनम् ।
विद्वानेतावतिथ्येषा मूर्छनेत्यवधारयेत् ॥" (p. 29).

"दत्तिलेनाप्युक्तं—
पूर्णाः पञ्चसहस्राणि त्रयस्त्रिंशच्च संख्यया ।
कथयन्ति प्रतिग्राममुपायो गणनेऽधुना ॥" (p. 30).

"तथा चाह दत्तिलः—
हन्यादनन्तरायेण पूर्वां यस्य क्रमोत्क्रमात् ।
गुणकारसमास्तत्र क्रमाच्छेषाः स्युरुत्क्रमाः ॥" (p. 30).

There are evidences to show that the work was largely used for study by later authors on music. Pārśvadeva alias Saṅgītākara, author of Saṅgītasamayasāra (Trivandrum Sanskrit Series No. 87) refers to Dattila as one of the authorities on the subject of Tāla, thus:—

"श्रीसोमेश्वरदत्तिलप्रभृतिभिस्तालस्वरूपं पुरा
प्रोक्तं सर्वजगद्धिताय" (Adhi. 9. Slo. 2).

Raghunāthabhūpa makes mention of Dattila in various places of his Saṅgītasudhā, thus:—

"शक्तिश्च शार्दूलककोहलौ च
समीरणः काश्यपमारुती च ।
रम्भार्जुनौ नारदतुम्बुरू च
पौलस्त्यविश्वावसुदत्तिलाश्च ॥"
(Padārthasaṅgrahaprakaraṇa).

"मतङ्गशार्दूलकदत्तिलाद्यैः
प्रणीतशास्त्राणि मुहुर्विचार्य ॥" (Svarādhyāya).

Kṣīrasvāmin quotes Dattila in his commentary Amarakośodghāṭana in explaining the words मन्द्र and तार in the Nāṭyavarga of the Amarakośa,:—

"यद् दत्तिलः—
नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः ।
स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते ॥
"यद् दत्तिलः—
तत्र ज्ञेयाः कलापाताः पादभागास्तथैव च ।
मात्रा च परिवर्तश्च वस्तु चैव विशेषतः ॥"

Dattila is also cited as an authority by Abhinavagupta in his commentary Abhinavabhārati on the Nāṭyaśāstra, thus:—

"दत्तिलाचार्येण तु संक्षिप्योक्तमेतत् —
आद्यद्वितीयमध्यान्तात् पादभागाद् विदुः क्रमात्।
कनिष्ठानामिकायुक्तमध्यमादेशिनीकृतात् ॥
अयुग्ममध्यनीतः स्याद्,

A number of later authors follow Dattila, and similarly Dattila, in his turn, treads the path of Nārada, Kohala and Viśākhila and many other predecessors by way of quoting them in his work.

It may be doubted from the last line 'अकरोद् दत्तिलः शास्त्रं गीतं दत्तिलसंज्ञितम्' that the present work is only an abridgement by a later hand from a larger work on music by Dattila. But the fact that the stanzas quoted by Mataṅga in his Bṛhaddeśī and by Kṣīrasvāmin in his commentary on Amarakośa are all traceable in the present work makes it certain that it is the real work of Dattila. The following two verses,

"यद् दत्तिलः—
मुखं प्रतिमुखं चैव गर्भो विमर्श एव च ।
तथा निर्वहणं चैव नाटके पञ्च सन्धयः ॥

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथाक्रमम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥"

quoted by Sarvānanda in his commentary Ṭīkāsarvasva on Amarakośa do not however occur in the present work. As these verses which refer to the subject of dramaturgy could not fitly belong to the present work which professedly deals with the science of music, I think there must be a treatise also on dramaturgy by Dattila wherein these verses may be traced.

The discovery of the manuscript on which the edition of this work is based is rather interesting. A few years ago, when I was ransacking the miscellaneous papers accumulated in a corner of my office, I came across a paper transcript of Dattila tacked on to the end of the manuscript of Saṅgīta-samayasāra already published by this department. It was found almost neglected and left out to the care of insects, and I congratulated myself for having rescued it from impending disaster.

The publication of this work was promised by me in the preface to the Bṛhaddeśī published in the year 1928 and I am glad to mention that Kohala's work on music will also be published in the series ere long.

10-12-1105,
Trivandrum.

K. SĀMBAŚIVA ŚĀSTRĪ.

B 8

B8

## उपोद्घातः।

इदं श्रीदत्तिलमुनिप्रणीतं गान्धर्वशास्त्रसंक्षेपवचनात्मकं नाम्ना दत्तिलम्। तथाच दृश्येते ग्रन्थादिमान्तिमभागौ —

"गान्धर्वशास्त्रसंक्षेपः सारतोऽयं मयोच्यते।"

(पृ० १)

इति,

"अकरोद् दत्तिलः शास्त्रं गीतं दत्तिलसंज्ञितम्।"

(पृ० २४)

इति च।

स चायं दत्तिलमुनिः,

"पुत्रानध्यापयामास प्रयोगे चापि तत्त्वतः।
शाण्डिल्यं चैव वात्स्यं च कोहलं दत्तिलं तथा॥"

(अध्या० १)

इत्येवमादिभिः नाट्यशास्त्रोपक्रमे स्मर्यमाणेषु भरतमुनिपुत्रेष्वन्यतमः। अत एव सङ्गीतशास्त्रप्रणेतृषु प्रामाणिकेषु कोऽप्यतिप्राचीनः प्रमुख इत्यपि स्पष्टम्। अस्मदधिकरणप्रकाशितबृहद्देशीकर्त्रा —

"दत्तिलेनाप्युक्तं —

"तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात् तथा।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः॥"

(पृ० २९)

"तथाचाह दत्तिलः —

"एवं कृतेऽपि तानत्वे गणयित्वा विनाशिनम्।
विद्वानेतावतिथ्येषा मूर्छनेत्यवधारयेत्॥"

(पृ० २९)

"दत्तिलेनाप्युक्तं —

"पूर्णाः पञ्चसहस्राणि त्रयस्त्रिंशच्च सङ्ख्यया।
कथयन्ति प्रतिग्राममुपायो गणनेऽधुना॥"

(पृ० ३०)

"तथाचाह दत्तिलः—

"हन्यादनन्तरायेण पूर्वा यस्य क्रमोत्क्रमात् ।
गुणकारसमास्तत्र क्रमाच्छेषाः स्युरुत्क्रमाः ॥"

(पृ० ३०)

* इति तत्र तत्र नामग्राहं प्रामाणिकतया गृह्यमाणोऽयं ततोऽनर्वाचीनः सम्भाव्यते । न केवलमसन्मतङ्गमुनिः, अन्येऽपि सङ्गीतशास्त्रनिर्मातारो नैके ग्रन्थकारा व्याख्यातारश्चेमं बहुमन्यन्ते । तथाहि — सङ्गीताकरनामधेय-श्रीपार्श्वदेवः सङ्गीतसमयसारे † —

"श्रीसोमेश्वरदत्तिलप्रभृतिभिस्तालस्वरूपं पुरा
प्रोक्तं सर्वजगद्धिताय...................... ।"

(अधि० ९. श्लो० २)

इति तालस्वरूपनिर्धारकेषु दत्तिलं प्रामाणिकमाचष्टे ।

श्रीरघुनाथभूपः स्वकीयसङ्गीतसुधायां

"शक्तिश्च शार्दूलककोहलौ च समीरणः काश्यपमारुती च ।
रम्भार्जुनौ नारदतुम्बुरू च पौलस्त्यविश्वावसुदत्तिलाश्च ॥"

इति पदार्थसङ्ग्रहप्रकरणे,

"मतङ्गशार्दूलकदत्तिलाद्यैः प्रणीतशास्त्राणि मुहुर्विचार्य ।"

इति स्वराध्याये च दत्तिलं कीर्तयति ।

---

* तथाच संवदन्तेऽमी प्रस्तुतदत्तिले. —

"तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात् तथा ।
तत्र प्रवेशो ध्वन्यैक्यमसंस्पर्शस्तु निग्रहः ॥
एवं कृतेऽपि तानत्वे गणयित्वा विनाशिनम् ।
विद्वानेतावतिथ्येषा मूर्छनेत्यवधारयेत् ॥
पूर्णाः पञ्चसहस्राणि त्रयस्त्रिंशच्च सङ्ख्यया ।
कथयन्ति प्रतिग्राममुपायो गणनेऽधुना ॥
हन्यादनन्तरायेण पूर्वा यस्य क्रमोत्क्रमात् ।
गुणकारसमास्तत्र क्रमाः शेषाः स्युरुत्क्रमाः ॥"

(पु० ४. श्लो० ३६, ३७, ३९, ४०)

† T. S. S. NO. 87.

क्षीरस्वाम्याचार्योऽमरकोशोद्घाटनाभिधायां व्याख्यायां नाट्यवर्गे मन्द्र-तार-तालपदार्थोद्घाटनवेलायां —

'यद् दत्तिलः' इत्युपक्रम्य तदीये —

"नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः ।
स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते ॥

"तत्र ज्ञेयाः कलापाताः पादभागास्तथैव च ।
मात्रा च परिवर्तश्च वस्तु चैव विशेषतः ॥"

इति द्वे कारिके प्रमाणभूते पठति ।

नाट्यवेदविवृतावभिनवभारत्यां श्रीमदभिनवगुप्ताचार्याः — 'दत्तिलाचार्येण तु *सङ्क्षिप्योक्तमेतद्' इति प्रस्तुत्य

"आद्यद्वितीयमध्यान्तात् पादभागाद् विदुः क्रमात् ।
कनिष्ठानामिकायुक्तमध्यमादेशिनीकृतात् ॥
अयुग्ममध्यनीतः स्याद् "

इति दत्तिलकारिकाणां प्रामाणिकत्वमङ्गीकुरुते ।

यथैवमेनं दत्तिलमुनिमन्ये प्रमाणयन्ति, तथैषोऽपि श्रीनारद-कोहल-विशाखिलादीन् प्रमाणयतीति मन्ये पुरतः परतश्च सप्रमाणमिदं गीतशास्त्रं प्रथते

अत्र केचिदिमं ग्रन्थम्,

"अकरोद् दत्तिलः शास्त्रं गीतं दत्तिलसंज्ञितम् ।"

इति वचनात् स्यादन्यकृतो दत्तिलशास्त्रसङ्ग्रह इति संशयितुमलम् । परन्तु स्थालीपुलाकन्यायेन परीक्षायां श्रीमतङ्गमुनिना क्षीरस्वाम्याचार्येण च समुद्धृतानां दत्तिलकारिकाणां पौर्वापर्यभावमजहतीनां तथैव सन्निवेशदर्शनं विचक्षणानामसंशयमिदं शुद्धमेव दत्तिलं प्रत्याययति ।

श्रीमत्सर्वानन्दविरचिते टीकासर्वस्वे नाट्यवर्गे निर्वहणशब्दार्थविवरणसमये 'तथाच दत्तिलः' इत्यारभ्य

"मुखं प्रतिमुखं चैव गर्भो विमर्श एव च ।
तथा निर्वहणं चैव नाटके पञ्च सन्धयः ॥

---

* इदं 'गान्धर्वशास्त्रसंक्षेप' इति दत्तिलाचार्यप्रतिज्ञागतं संक्षेपमनुस्मारयन् अनङ्गमयं प्रकृतो ग्रन्थो दात्तिलप्रणीत इति स्पष्टयति ।

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथाक्रमम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥"

इति पठ्यमानस्य कारिकाद्वयस्य प्रकृतदत्तिलेऽनन्तर्भावस्तु गान्धर्वशास्त्रसंक्षेपेऽनवसरतयास्यैव दत्तिलस्य सम्भाव्यग्रन्थान्तरघटकतया च सुतरामुपपद्यत एव । इयता कश्चिदन्योऽपि लाभोऽचिन्तितोपनतः यदनेनावश्यं ग्रन्थान्तरकर्त्रापि भूयेतेति ।

इदमस्मदधिकरणप्रकाशितस्यैव सङ्गीतसमयसाराख्यस्य ग्रन्थस्य मातृकायां *कुहचन कोणे निलीनं प्रतिरूपितमप्यदृढप्रत्यवेक्षणात् परित्याज्यपूलभाण्डेषु पातितं क्रमशो विशरारुताशरणमासीत् । अथ कदाचिदकस्मादन्यगवेषणपरायणस्य मे दृष्टिपथप्रविष्टमचेदृशीं प्रकाशनपदवीं प्राप्तमिति प्राचीनग्रन्थसंरक्षणप्रकाशनाधिकारो मे दैवादद्य सफलः कृतः । बृहद्देशीग्रन्थोपोद्घातेऽस्य दत्तिलस्यैवैतदुपोद्घाते सद्यः सम्पादितस्य श्रीकोहलमुनिविरचितसङ्गीतशास्त्रग्रन्थस्याप्यविलम्बं प्रकाशनमाशंसुरस्मि धन्यधन्यः ।

अनन्तशयनम्,
१०-१२-१०५.

के. साम्बशिवशास्त्री.

---

* एतावता प्रस्तुतग्रन्थप्रकाशनाश्रय आदर्शः तस्य केरलीयलिपित्वं द्वित्रशतवर्षवृद्धत्वं च सङ्गीतसमयसारीयाण्येवेति सिद्धम् ।

॥ श्रीः ॥

# दत्तिलम् ।

---

(प्रणम्य परमेशानं) ब्रह्माद्यांश्च गुरूंस्तथा ।
गान्धर्वशास्त्रसंक्षेपः सारतोऽयं मयोच्यते ॥ १ ॥
गान्धर्वं नारदादिभ्यः प्रत्तमादौ स्वयम्भुवा ।
विधिवन्नारदेनाथ पृथिव्यामवतारितम् ॥ २ ॥
पदस्थस्वरसङ्घातस्तालेन सुमितस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥ ३ ॥
लोकाद् विद्यात् पदा(हीनं ? नीह) शब्दशास्त्राद्यनुग्रहात् ।
प्रसिद्धमवधानं तु सम्यग्बुद्ध्यादियोजनम् ॥ ४ ॥
द्वयमन्यदतो वाच्यमिह संक्षेपमिच्छता ।
तत्र स्वरगतं पूर्वं मेयत्वादुपदिश्यते ॥ ५ ॥
श्रुतयोऽथ स्वरा ग्रामौ मूर्छनास्तानसंयुताः ।
स्थानानि वृत्तयश्चैव शुष्कं साधारणे तथा ॥ ६ ॥
जातयश्चैव वर्णाश्च नानालङ्कारसंयुताः ।
एष स्वरगतो(दे ? द्दे)शः संक्षेपेणाथ निर्णयः ॥ ७ ॥
नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः ।
स एव *कण्ठमध्ये स्यात् तारः शिरसि गीयते ॥ ८ ॥

---

* 'कण्ठे मध्यः स्यात्' इति क्षीरस्वामिना नाट्यवर्गे स्मृतः पाठः.

G. P. T. 681. 500. 17-1-1105 B

उत्तरोत्तरतारस्तु वीणायामधरोत्तरः ।
इति ध्वनि(वि)शेषास्ते श्रवणाच्छ्रुतिसंज्ञिताः ॥ ९ ॥
तेभ्यः कांश्चिदुपादाय गीयन्ते सर्वगीतिषु ।
आद्रियन्ते च ये तेषु स्वरत्वमुपलभ्य ते ॥ १० ॥ (भ्यते)
स्वराः षड्जादयः सप्त ग्रामौ द्वौ षड्जमध्यमौ ।
केचिद् गान्धारमप्याहुः स (तु) नेहोपलभ्यते ॥ ११ ॥
षड्जत्वेन गृहीतो यः षड्जग्रामे ध्वनिर्भवेत् ।
तत ऊर्ध्वं तृतीयः स्याद् ऋषभो नात्र संश्रयः ॥ १२ ॥
ततो द्वितीयो गान्धारश्चतुर्थो मध्यमस्ततः ।
मध्यमात् पञ्चमस्तद्वत् तृतीयो धैवतस्ततः ॥ १३ ॥
निषादोऽतो (द्विती)यः (स्त ? स्यात) ततः षड्जश्चतुर्थकः।
पञ्चमो मध्यमग्रामे मध्यमाद्यस्तृतीयकः ॥ १४ ॥
एवं ध्वनिविशेषान् यः सर्वान् षड्जादिसंज्ञितान् ।
व्यवस्थितान्तरान् वेत्ति स वेत्ति स्वरमण्डलम् ॥ १५ ॥
निषादः काकलीसंज्ञो द्विश्रु(त्युत)कर्षणाद् भवेत् ।
गान्धारस्तद्वदेव स्यादन्तरस्वरसंज्ञितः ॥ १६ ।
अनंशत्वात्तु भेदेन स्वरता नोच्यते तयोः ।
अतो निषादगान्धारावे(दा ? ता)वांशैरुदाहृतौ ॥ १७ ॥
योऽत्यन्तबहुलो यत्र वादी वांशश्च तत्र सः ।
मि(थ)स्संह + नौ ज्ञेयौ त्रयोदशनवान्तरौ ॥ १८ ॥
अतोऽनुवादिनः शेषा द्व्यन्तरौ तु विवादिनौ ।
स्वरांश्चतुर्विधानेव जानीयात् स्वरयोगवित् ॥ १९ ॥

पञ्चमं मध्यमग्रामे षड्जग्रामे तु धैवतम्।
अनाशिनं विजानीयात् सर्वत्रैव तु मध्यमम्॥ २०॥
स्वरौ यावतिथौ स्यातां ग्रामयोः षड्जमध्यमौ।
मूर्छना तावतिथ्येव तद्ग्रामावत एव तौ॥ २१॥
उत्तरमन्द्रा रजनी तृतीया चोत्तरायता।
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरी कृता॥ २२॥
अश्वक्रान्ता तु षष्ठी स्यात् सप्तमी चाभिरुद्गता।
स्वरक्रमगता विद्यात् सप्तैताः षड्जमूर्छनाः॥ २३॥
सौवीरी मध्यमग्रामे हरिणा(श्वा?ह्वा) तथैव च।
स्यात् कपोलनता चैव चतुर्थी शुद्धमध्यमा॥ २४॥
मान्दी च पौरवी चैव हृष्य(का) + + + + +।
+ + + पञ्च षट् पूर्णसाधारणकृताः स्मृताः॥ २५॥
गान्धारं धैवतीकुर्याद् (व?द्वि)श्रुत्युत्कर्षणाद् यदि।
तद्वशान्मध्यमादींश्च निषादादीन् यथास्थितान्॥ २६॥
ततोऽभूद् यावतिथ्येषा षड्जग्रामस्य मूर्छना।
जायते तावतिथ्येव मध्यमग्राममूर्छना॥ २७॥
श्रुतिद्वयापकर्षेण गान्धारीकृत्य धैवतम्।
पूर्ववन्मध्यमाद्याश्च भावयेत् षड्जमूर्छनाः॥ २८॥
इत्येता मूर्छनाः प्रोक्ताः सरणाश्चैव वैशिकैः।
संस्थाप्य मूर्छनामेवं + न्या वक्ष्यानुगः(?) क्रमः॥२९॥
पञ्चस्वराः षट्स्वराश्च मूर्छना याः प्रकीर्तिताः।
(तनाना?ताना)श्चतुरशीतिस्तु ता एवास्मैरुदाहृताः॥३०॥

अग्निष्टोमादिनामानस्त उक्ता नारदादिभिः ।
देवाराधनयोगेन तत्पुण्योत्पादका यतः ॥ ३१ ॥
षड्जर्षभनिषादैश्च पञ्चमेन च षड्जगाः ।
षट्स्वरा मध्यमग्रामे गान्धारान्तैस्त्रिभिर्विना ॥ ३२ ॥
स्वग्राममूर्छना ह्येताः क्रियमाणाः पृथक पृथक् ।
भवन्त्येकोनपञ्चाशदेवं पञ्चस्वरा अपि ॥ ३३ ॥
षड्जपञ्चमहीनश्च द्विश्रुतिभ्यां तथैव च ।
पञ्चमर्षभहीनश्च षड्जग्रामे त्रयः स्मृताः ॥ ३४ ॥
धैवतर्षभहीनश्च द्विश्रुतिभ्यां तथैव च ।
द्वावेतौ मध्यमग्रामे पञ्चत्रिंशदमी स्मृताः ॥ ३५ ॥
तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात् तथा ।
तत्र प्रवेशो ध्वन्यैक्यमसंस्पर्शस्तु निग्रहः ॥ ३६ ॥
एवं कृतेऽपि तानत्वे गणयित्वा विनाशिनम् ।
विद्वानेतावतिध्येषा मूर्छनेत्यवधारयेत् ॥ ३७ ॥
क्रममुत्सृज्य तन्त्रीणां तननैर्मूर्छनास्तु याः ।
पूर्णाश्चैवाप्यपूर्णाश्च कूटतानास्तु ते स्मृताः ॥ ३८ ॥
पूर्णाः पञ्चसहस्राणि त्रयस्त्रिंशच्च संख्यया ।
कथयन्ति प्रतिग्राममुपायो गणनेऽधुना ॥ ३९ ॥
हन्यादनन्तरायेण पूर्वा (या ? य)स्य क्रमोत्क्रमात् ।
गुणकारसमास्तत्र क्रमाः शेषाः स्युरुत्क्रमाः ॥ ४० ॥
साप्तस्व(र्या ? र्यं)तु सप्तानामेकैका भजते यतः ।
अत एकोनपञ्चाशत् कैश्चित् कूटैः सहोदिताः ॥ ४१ ॥

अथ स्थानानि येषूक्तो द्वाविंशतिविधो ध्वनिः ।
व्यस्तानि तानि षट्षष्टिं विद्यान्मन्द्रादिसिद्धये ॥ ४२ ॥
दक्षिणो वृत्तिचित्राश्च वृत्तयस्तास्त्रयं विधिः ।
प्रधानं गीतमुभयं वाद्यं चेति यथाक्रमम् ॥ ४३ ॥
यद् वृत्तिषू(त्त ? क्त)माचार्यैर्वीणावाद्यादिलक्षणम् ।
तद् ग्रन्थविस्तरभयादिह नोदाहृतं मया ॥ ४४ ॥
वाद्यं यद् गीतवृत्तिस्थमगीतं संप्रयुज्यते ।
वैचित्र्यार्थप्रयोगज्ञैः शुष्कं तदभिधीयते ॥ ४५ ॥
साधारणे तु विज्ञेये स्वरजात्युपलक्षिते ।
स्वरमध्ये तयोः पूर्वं तत्काकल्यन्तरौ स्वरौ ॥ ४६ ॥
जात्यन्तरेण सदृशं यज्जातावुपलभ्यते ।
एकग्रामे च बाहुल्याज्जातिसाधारणं तु तत् ॥ ४७ ॥
जातयोऽष्टादश ज्ञेयास्तासां सप्तस्वराख्यया ।
शुद्धाश्च विकृताश्चैव शेषास्तत्सङ्करोद्भवाः ॥ ४८ ॥
षड्जाया मध्यमायाश्च संसर्गात् षड्जमध्यमा ।
षड्जायास्त्वथ गान्धार्या जायते षड्जकैशिकी ॥ ४९ ॥
तयोरेव सधैवत्ये षड्जोदीच्यवती भवेत् ।
आसां समध्यमानां तु गान्धारोदीच्यवा भवेत् ॥ ५० ॥
गान्धार्या मध्यमायाश्च पञ्चम्याश्चैव सङ्करात् ।
सधैवतीनामासां तु मध्यमोदीच्यवा भवेत् ॥ ५१ ॥
आसां स्याद् रक्तगान्धारी नैषादी चेच्चतुर्थिका ।
आर्षभ्यास्तु भवेदन्ध्री गान्धार्याश्चैव सङ्करात् ॥ ५२ ॥

अनयोस्तु सपञ्चम्योर्नन्दयन्ती प्रजायते ।
सनिषादास्तु गान्धार्यः कुर्युः कार्मारवीमिमाः ॥ ५३ ॥
गान्धारी पञ्चमी चैव तथा गान्धारपञ्चमी ।
आर्षभीधैवतीवर्जाः कैशिकीमिति सङ्कराः ॥ ५४ ॥
ग्रहांशौ तारमन्द्रौ च षाडवौडुविते क्रमात् ।
अल्पत्वं च बहुत्वं च न्यासोऽपन्यास एव च ॥ ५५ ॥
एवमेतद् यथाजाति दशकं जातिलक्षणम् ।
लक्षणं दशकस्यास्य संक्षेपेणाभिधीयते ॥ ५६ ॥
तत्र ग्रहस्तु गीतादिस्वरोंऽशः पूर्वकीर्तितः ।
पञ्चस्वरपरस्तार उच्चैरंशादिहेष्यते ॥ ५७ ॥
आ षड्जान्नन्दयन्त्यां तु वरो नातः प्रशस्यते ।
मृदुरंशपरो मन्द्रो न्यासान्तस्तत्परोऽपि वा ॥ ५८ ॥
षट्पञ्चस्वरके गीते षाडवौडुविते क्रमात् ।
अल्पत्वं च बहुत्वं च प्रयोगाल्पबहुत्वतः ॥ ५९ ॥
गीतकान्त्यस्वरो न्यासो विदारीमध्यगस्तथा ।
न्यासवत् स्यादपन्यासो यथाजाति ब्रवीम्यहम् ॥ ६० ॥
यं विना हीनता यस्याः स्याच्चेत् तस्यां तु सोऽल्पकः ।
अंशाढ्यमन्यन्यासस्तु स्वरजातिषु नामकृत ॥ ६१ ॥
तद्ग्रहा तदपन्यासा तदंशा च यदा भवेत् ।
मन्त्रन्यासा च पूर्णा च शुद्धा जातिस्तदोच्यते ॥ ६२ ॥
अंशाः स्युः पञ्च षड्जाया निषादर्षभवर्जिताः ।
अपन्यासस्तु (गान्धारः पञ्चमश्चाथ सङ्गतिः ॥ ६३ ॥

षड्ज)गान्धारयोस्तु स्यात् षड्जधैवतयोस्तथा ।
षाडवत्वं निषा(दः ? दे) स्यान्नास्यामौडुवितं भवेत् ॥६४॥
आर्षभ्यास्तु स्मृता अंशा निषादर्षभधैवताः ।
षड्जपञ्चमहीने च षाडवे + + + + + ॥ ६५ ॥
धैवत्यां गुरुभिः प्रोक्तावंशावृषभधैवतौ ।
समध्यमावपन्यासौ प्रागुक्ता हीनतोत्क्रमात् ॥ ६६ ॥
अंशौ निषादवत्यास्तु द्विश्रुती सर्षभौ स्मृतौ ।
धैवतीवद् भवे(च्छेषो न्यासो नामकृदेव तु) ॥ ६७ ॥
अंशाः स्युः षड्जकैशिक्यां षड्जगान्धारपञ्चमाः ।
सनिषादास्तु गान्धारा अपन्यासास्त एव तु ॥ ६८ ॥
ऋषभोऽल्पप्रयोगः स्यान्न्यासो गान्धार इष्यते ।
नित्यं पूर्णस्वरा चेयमाचार्यैः परिकीर्तिता ॥ ६९ ॥
स्यात् षड्जोदीच्यवत्यंशैः षड्जमध्यमधैवतैः ।
सनिषादैरपन्यासौ विज्ञेयौ षड्जधैवतौ ॥ ७० ॥
ऋषभेण विहीनेयं द्वाभ्यां चेत् पञ्चमेन च ।
मन्द्रगान्धारभूयस्त्व*मस्या न्यासस्तु मध्यमः ॥ ७१ ॥
सप्तांशः षड्जमध्याया न्यासौ वै षड्जमध्यमौ ।
क्रमान्निषादगान्धारावस्यां हीनत्वकारिणौ ॥ ७२ ॥
यथेष्टं स्याच्च सञ्चारो यथा ग्रामाविरोधकृत् ।
षड्जग्रामे तु सप्तैताः शेषा मध्यमजातयः ॥ ७३ ॥
गान्धार्यां द्वावनंशौ तु हेयावृषभधैवतौ ।
क्रमान्नित्यमपन्यासौ विज्ञेयौ षड्जपञ्चमौ ॥ ७४ ॥

* 'मपन्यासस्तु' इति मुद्रिता बृहद्देशी (पृ० ६१) ।

धैवताद्दृषभं गच्छेदेव स्यात् सर्वमेव तु ।
प्रायशो रक्तगान्धार्या अपन्यासस्तु मध्यमः ॥ ७५ ॥
बहुप्रयोगः कर्तव्यो धैवतोऽथ निषादवान् ।
षड्जगान्धारसञ्चारः कार्यश्चासां प्रयोक्तृभिः ॥ ७६ ॥
गान्धारोदीच्यवा प्रायः षड्जोदीच्यवतीसमा ।
षड्जश्च मध्यमश्चांशौ नचौडुबितमिष्यते ॥ ७७ ॥
पञ्चांशा मध्यमायास्तु ज्ञे(यो ? या) द्विश्रुतिवर्जिताः ।
क्रमात् ताभ्यां च हीनत्वं बहुलौ षड्जमध्यमौ ॥ ७८ ॥
गान्धारोदीच्यवावत् तु मध्यमोदीच्यवा भवेत् ।
साप्तस्वर्यं तु नित्यं स्यादस्यामंशश्च पञ्चमः ॥ ७९ ॥
पञ्चम्यां गुरुभिः प्रोक्तावंशा वृषभ*पञ्चमौ ।
सनिषादावपन्यासौ मध्यमर्षभसङ्गतिः ॥ ८० ॥
षड्जमध्यमगान्धारा अल्पास्तु परिकीर्तिताः ।
स्यान्नि(षादा)च्च गान्धारो मध्यमाच्च हीनता ॥ ८१ ॥
ज्ञे(यौ ? यो) गान्धारपञ्चम्यां पञ्चमोंऽशः प्रयोक्तृभिः ।
सर्षभः स्यादपन्यासो न्यासो गान्धार इष्यते ॥ ८२ ॥
गान्धा(र्ये ? र्यो)मथ पञ्च(म्या ? म्यां) यत् सञ्चारादि [कीर्तितम् ।
तदस्यामपि विज्ञेयं किन्तु पूर्णस्वरा सदा ॥ ८३ ॥
अन्ध्रयामनंशा विज्ञेयाः षड्जमध्यमधैवता ।
षाडबं षड्जहीनं तु न्यासो गान्धार इष्यते ॥ ८४ ॥

---

* 'धैवतौ । समध्यमावप' (पृ० ६२) इति, मुद्रिता बृहद्देशी ।

नन्दयन्त्यामपन्यासौ ज्ञेयौ मध्यमपञ्चमौ ।
ग्रहो न्यासश्च गान्धारः पञ्चमोंऽशः प्रकीर्तितः ॥ ८५ ॥
अन्ध्रीवत् षाडबं ज्ञेयमनौडुबितमेव च ।
स्यान्मन्दर्षभसञ्चारो लङ्घनीयश्च स क्वचित् ॥ ८६ ॥
कर्मारव्यामनंशास्तु षड्जगान्धारपञ्चमाः ।
पूर्णता पञ्चमो न्यासो गान्धार(गमनं) बहु ॥ ८७ ॥
कैशिक्यामृषभोऽनंशो न्यासौ तु द्विश्रुती स्मृतौ ।
ऋषभो धैवतश्चैव हेयावस्यां यथाक्रमम् ॥ ८८ ॥
पञ्चमोऽपि भवेन्न्यासो निषादांशे(तथै ? ऽथ धै)वते ।
ऋषभः स्यादपन्यासः कै(श्रि)दुक्तोंऽशवत् तथा ॥ ८९ ॥
पञ्चमो (ब)लवानस्यां स्यान्निषादस्तथैव च ।
इति त्रिषष्टिरंशा ये तेषामेकैकशोंऽशताम् ॥ ९० ॥
प्रकल्प्यापोद्यते प्राप्तं षाडबौडुबितं क्वचित् ।
अषाडबा निषादेंऽशे सति (स्यात्) षड्जमध्यमा ॥ ९१
गान्धारे च यतो लोपो नांशसंवादिनोर्मतः ।
कैशिकी रक्तगान्धारी (गान्धारी) चैव पञ्चमे ॥ ९२ ॥
तथा षाड्जी तु गान्धारे धैवते तदुदीच्यवा ।
गान्धारीरक्तगान्धार्योः षड्जमध्यमपञ्चमाः ॥ ९३ ॥
सनिषादाः स्मृता अंशा अनौडुबितभागिनः ।
षड्जमध्यमजातौ तु गान्धारोऽथ निषादवान् ॥ ९४ ॥
कैशिक्यामथ पञ्चम्यां क्रमशो धैवतर्षभौ ।
योज्यं सप्ताधिकेष्वेवं चत्वारिंशत्सु षाडबे ॥ ९५ ॥

अपववदीविनिर्मुक्तत्रिंशदौडुबितं भवेत् ।
सङ्करे रूपबाहुल्यं जातिनिर्देश इष्यते ॥ ९६ ॥
तस्माद् यद् गीयते किञ्चित् तत् सर्वं जातिषु स्थितम् ।
अथ वर्णास्तु चत्वारो ज्ञेया अन्वर्थसंज्ञया ॥ ९७ ॥
स्थायिसञ्चारिणौ चैव तथारोह्यवरोहिणौ ।
एकस्वरा पदे गीतिः स्थायिवर्णोऽभिधीयते ॥ ९८ ॥
सञ्चारी स्वरसञ्चाराद् यथार्थौ चोत्तरा(अ ? व)पि ।
वर्णाश्रयास्तु विज्ञेया अलङ्कारास्त्रयोदश ॥ ९९ ॥
नामतो रूपतश्चैव संक्षेपेण ब्रवीमि तान् ।
प्रसन्नं पूर्वमुच्चार्य शनैः सन्दीपयेत् स्वरम् ॥ १०० ॥
प्रसन्नादिर्भवेदेवं प्रसन्नान्तो विलोमतः ।
एवं प्रसन्नमध्यश्च प्रसन्नाद्यन्त एव च ॥ १०१ ॥
एते स्थायिन्यलङ्काराश्चत्वारः परिकीर्तिताः ।
क्वचित् स्वरे चिरं स्थित्वा स्पृष्ट्वा (सा ? ता)रं ततोऽभिवत् ॥
प्रत्यागच्छेत्तु तत्रैव बिन्दुरेषोऽभिधीयते ।
स्यान्निवृत्तप्रवृत्ताख्यस्तद्वन्मन्द्रं स्पृशेद् यदि ॥ १०३ ॥
प्रेङ्खोलितं द्वयोर्विद्यात् तुल्यकालं गतागतम् ।
क्रमेण परमं (तरमन्तां ? तारं) गत्वा मन्द्रं पतेत् ततः ॥
तारमन्द्रप्रसन्नोऽयमलङ्कारोऽभिधीयते ।
मन्द्रादुत्पतितस्तारं क्रमेणैवावरोहति ॥ १०५ ॥
मन्द्रतारप्रसन्नोऽयं सर्वसाम्यात् समो भवेत् ।
उरःकण्ठशिर(स्त ? स्थ)स्य त्रिश्रुतेः कम्पनाद् भवेत् ॥

कम्पितं हरितं चैव रेचितं च यथाक्रमम् ।
एषां च पञ्च बि(म्बा ? न्द्वा)द्या नित्यं सञ्चारिसंश्रयाः ॥
(आ ? प्र)सन्नादिः प्रसन्नान्तो + + + + + वरोहिणी ।
शेषा अपि यथायोगं सर्ववर्णाश्रयाः स्मृताः ॥ १०८ ॥
इति श्लोकशतेनेदमुक्तं (स्वरगतं स्फुटम्) ।
अथ तालं प्रवक्ष्यामि + + + + + + + + + ॥ १०९ ॥
तालात् साम्यं भवेत् साम्यादिह सिद्धिः परत्र च ।
तत्र ज्ञेयाः कलाः पाताः पादभागास्तथैव च ॥ ११० ॥
मात्रा च परिवर्तश्च वस्तु चैव विशेषतः ।
विदार्यङ्गलयाः पाणिर्यतिः प्रकक + + + ॥ १११ ॥
+ + + + + वज्रा च गीतिर्मार्गश्च शास्त्रतः ।
इत्युद्देशः पदार्थानां ज्ञेयस्तालगतो बुधैः ॥ ११२ ॥
संक्षेपेणाथ वक्ष्यामि सूक्ष्ममेषां विनिर्णयम् ।
तत्रावापोऽथ निष्क्रामो (विक्षेपश्च प्रवेशनम्) ॥ ११३ ॥
(श)म्या तालश्च वि(ज्ञे)यः सन्निपातश्च सप्तमः ।
कैश्चिन्निमेषकाले + कला सप्तविधोदिता ॥ ११४ ॥
लयस्थित्या च मार्गेषु कल्पितं तैः कलान्तरम् ।
सर्वा चेयं कला येषां घण्टानादवता + + ॥ ११५ ॥
(ते)षां म + + मार्गेषु विशेषोऽयं कलाश्रयः ।
द्विमात्रा स्यात् कला चित्रे चतुर्मात्रा तु वार्त्तिके ॥
अष्टमात्रा तु विद्वद्भिर्दक्षिणे समुदाहृता ।
मात्रा तु लौकिकी नेह किन्तु पञ्चगुणा(त ?) ततः
[॥ ११७ ॥

तया कार्यं कलामानं प्रयोगोऽथ नियम्यते ।
आवापसंज्ञकं ज्ञेयमुत्तानाङ्गुलिकुञ्चनम् ॥ ११८॥
अधस्तलेन हस्तेन निष्कामाख्यं प्रसारणम् ।
तस्य दक्षिणतः क्षेपो विक्षेपः परिभाषितः ॥ ११९ ॥
अथ चाकुञ्चनं ज्ञेयं प्रवेशाख्यमधस्तलम् ।
शम्या दक्षिणपातस्तु तालो वामस्तु कीर्तितः ॥ १२० ॥
उभयोर्हस्तयोः पातः सन्निपात इति स्मृतः ।
एवमेते त्रयः पाताः कला + + + + + + ॥ १२१ ॥
+ + + + सविध्येऽपि त्रिकलायां प्रयोजयेत् ।
कलानां समुदायोऽथ युग्मोऽयुग्मोऽथवा भवेत् ॥ १२२ ॥
युग्मश्चञ्चपुटस्थः स्यादयु(क्ता ? क् चा)चपुटाश्रयः ।
तालाक्षराणामेतेषां संस्थाप्य गु(रुलाघवम्) ॥ १२३ ॥
युग्मान्त्यं प्लुतवत् कृत्वा कलायोगं प्रकल्पयेत् ।
कलां गुरुणि युञ्जीत लघुन्यर्धकलां तथा ॥ १२४ ॥
प्लुते सार्धकलामेवं भवेदेककलो विधिः।
यथाक्षरेषु योक्तव्याः पाता एते (यथा)क्रमम् ॥ १२५ ॥
सन्निपातश्च शम्या च तालः शम्या तथैव च।
एष पातविधिर्ज्ञेयो युग्मे चायुग्म एव च ॥ १२६ ॥
शम्याताल + युग्मे द्विस्तालः शम्यमथापि वा।
उत्तरः पञ्चपाण्याख्यः षट्पि(ता)पुत्रकाक्षरः ॥ १२७ ॥
अयु(ग्म ? ग्मो)त्थः प्लुता(त्य ? द्य)न्तस्तथा चाहात्र कोहलः ।
द्वौ तु चाचपुटौ कृत्वा द्वितीयोपान्त्यके क्रमात् ॥ १२८ ॥

आद्यन्तयोर्नियुञ्ज्यैनं षट्पितापुत्रकं विदुः ।
सन्निपातश्च तालश्च तस्याद्यन्तौ यथाक्रमम् ॥ १२९ ॥
विर्मध्ये( ? ) तालशम्ये च + + दिभ्यो + लाविधिः ।
गुरुप्लुतानि हित्वाथ द्विमात्रान् परिकल्पयेत् ॥ १३० ॥
पादभागांश्चतुर्भिस्तैर्मात्रेति परिभाष्यते ।
आद्यं प्रकल्प्य निष्क्रामं द्वितीयं तु प्रवेशनम् ॥ १३१ ॥
सर्वेषां पादभागानां ततः पा(दा ? ता)न् प्रकल्पयेत् ।
शम्या द्वितीया कर्तव्या तालशम्ये तु मध्यमे ॥ १३२ ॥
सन्निपातोऽवसाने च द्विकलोऽयं विधिः स्मृतः ।
पञ्चपाणेश्चतुर्थी तु शम्या कार्या तथाष्टमी ॥ १३३ ॥
तृतीया षष्ठनवमा (?) तालाः शेषं यथोचितम् ।
विन्यस्य मध्ये विक्षेपमादावावापमेव च ॥ १३४ ॥
सर्वेषां पादभा(वा ? गा)नां प्रयुञ्जीत चतुष्कलम् ।
आद्यद्वितीयमाद्यान्तात् पादभागाद् विदुः क्रमात् ॥
+ + + + मिका युक्ता मध्यमाद् देशिनीगतान् ।
अयु + + + हीनं स्यादाद्यन्ता + क उत्तरः ॥ १३६ ॥
निष्क्रामश्च प्रवेशश्च द्विकले परिकीर्तितौ ।
एवं कालादि योक्तव्यं विशेषो यत्र नोच्यते ॥ १३७ ॥
पादभागोऽथ मात्रा वा समस्तस्ताल एव वा ।
गीयते परिव + + + + पत्तः स उच्यते ॥ १३८ ॥
यथा + + + षण्मात्रास्तिस्रोऽध्यर्धापि वा भवेत् ।
केचित् प्राधान्यमात्रेण वस्तुसंज्ञां प्रचक्षते ॥ १३९ ॥

अपन्यासोऽथ वस्त्वन्ते स्यादंशो न्यास एव वा ।
सन्न्यासो वाथ तस्याद्ध्ररूपं वि (?) ++++ा: ॥ १४० ॥
प्रथमा(पादो ? या विदा )र्याया मध्ये न्यासत्वभाक् स्वरः ।
न चेदंशविवादी स्यात् सन्न्यासः सोऽभिधीयते ॥ १४१ ॥
पदगीतिः समासौ या पृथग्गीतिरिव स्थिता ।
गीतपेशीं विदारीं तामाहुर्गीतविदारणाम् ॥ १४२ ॥
प्रमाणव(ज्यँ ? र्ज) तस्यास्तु रूपं वस्तुवदिष्यते ।
वक्ष्यमाणं मुखाद्यङ्गं विज्ञेयं (च) चतुर्विधम् ॥ १४३ ॥
एककं चावगाढं च प्रवृत्तं विविधं तथा ।
न्यासान्तमपि वांशान्तं विदार्येकैकसं(स्मृ?श्रि)तम् ॥ १४४ ॥
अवरोह्यवगाढं तु प्रायशोंऽशान्तमिष्यते ।
विदार्यो + + + + + स्वरेष्वेकान्तरेषु वा ॥ १४५ ॥
एवं न्यासान्तमारोहि प्रवृत्तमभिधीयते ।
आरोहणं तु विविधं तथा चैवावरोहणम् ॥ १४६ ॥
न्यासापन्यासयोगेन भवेदन्तरमार्गतः ।
शुद्धास्वंशवशात् तत्र ज्ञेय(म)न्तरमार्गतः ॥ १४७ ॥
न्यासापन्यासयोगेन विकृतासु च जातिषु ।
सामुद्रोऽथार्धसामुद्रो विवृद्धश्च यथाभिधः ॥ १४८ ॥
समो मध्योऽथ विषमो विविधस्त्रिविधः स्मृतः ।
वाङ्मात्रा सा महागीतिः सामुद्रो विविधो भवेत् ॥ १४९ ॥
(असं)पूर्णविदार्यादिसाम्यं चैव प्रकल्पयेत् ।
न्यासान्तो विविधः सर्वो मु(क्त्या ? क्त्वा) द्वैगेयकं भवेत्
[॥ १५० ॥

नित्यं च द्विविदारीका पूर्वौ ज्ञेये तु षट् परे (?) ।
अथ त्रयो लयाः सिद्धा द्रुतमध्यविलम्बिताः ॥ १५१ ॥
+ + + + दिरेतेषां प्रयोगो दक्षिणादिषु ।
समोपर्यवपूर्वस्तु पाणिस्त्रिविध इष्यते ॥ १५२ ॥
तत्र तालं च पाणिं च प्राहुरेकं मनीषिणः ।
समं चोपरिपातस्तु यद्वाधः संस्थितं भवेत् ॥ १५३ ॥
+ द्यां पदानि वर्णो वा तदेवमभिधीयते ।
लययातं यतिः प्रोक्ता चित्रादि(षु) यथाक्रमम् ॥ १५४ ॥
समा स्रोतोगता चैव गोपुच्छा च यथाक्रमम् ।
अथ प्रकरणं नाम मद्रकाद्यभिधीयते ॥ १५५ ॥
कुलकं छेद्यकं चैव द्विविधं तत् प्रचक्षते ।
(एकवाक्य)न्तु कुलकं त(द्) द्व्यर्थमपि वा पुनः ॥ १५६ ॥
नानार्थं छेद्यकं ज्ञेयमेकैकं त्रिविधं पुनः ।
निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च ॥ १५७ ॥
तत्र (स)र्वैस्तु नियमैर्युक्तं निर्युक्तमिष्यते ।
छन्दःपादादिनिर्योगात् पदनिर्युक्तसंज्ञितम् ॥ १५८ ॥
वस्तुमात्रमनिर्युक्तमिदानीं विधिरुच्यते ।
अनादेशे तु सर्वत्र कर्तव्यः स चतुष्कलः ॥ १५९ ॥
वस्त्वन्ते सन्निपातश्च सप्तरूपविधौ सदा ।
केचित्तु मद्रकादीनि विधिष्वेककलादिषु ॥ १६० ॥
आहुस्तालाक्षराण्येषां कल्पयन्त्यपराणि तु ।
त्रिमात्रं वस्तु संस्थाप्य मद्रकस्य प्रयोगवित् ॥ १६१ ॥

एतेषु पादभागेषु पातानेतान् प्रकल्पयेत् ।
चतुर्थे चाष्टमे चैव पञ्चमे दशमे तथा ॥ १६२॥
एकादशे च शम्यान्त्या द्वितीया नवमे स्मृता ।
षष्ठसप्तमयो +++ लोऽथ नवमस्य च ॥ १६३ ॥
++ स्तु द्वादशस्य स्याद् द्वितीयः पूर्वयोस्ततः ।
एवं त्रिचतुराणि स्युर्वस्तून्यन्तेऽथ शीर्षकम् ॥ १६४ ॥
भवेद् वस्तु कलासंख्यं पञ्चपाणिस्थमेव वा ।
आदावष्टकलं कार्यं (य)थामार्गमुपो(हं ? हनम्)॥ १६५ ॥
त्रिकलं तु प्रयुञ्जीत मद्रके द्विकले सदा ।
प्रत्युपोहनमप्येव द्व्यवरं च चतुष्परम् ॥ १६६ ॥
स्याद् द्वितीयादिवस्त्वादौ मद्रके तु चतुष्कले ।
अत्रैवांशादिरंशान्तः सामुद्गो विविधो भवेत् ॥ १६७ ॥
+++न्ते तृतीयेऽथ स द्वैगेयकसंज्ञितः ।
मन्द्रांशं प्रथमं वस्तु द्वितीयं तु यथाग्रहम् ॥ १६८ ॥
तृतीयमाहुराचार्याः परिवर्तसमाप्तिकम् ।
अस्यैवा +++++++ निष्क्राममेव च ॥ १६९ ॥
प्रतिवस्तु विहाय स्या(शशे ? च्छे)षं द्विकलम(त्रको?न्द्रके)।
भवेदेककले तस्य पञ्चपाणौ तु शीर्षकम् ॥ १७० ॥
विविधैककसंयुक्तमुभयत्राङ्गकल्पनम् ।

इति मन्द्रकं समाप्तम् ॥

---

अथ वस्तूनि षट् सप्त पञ्च वाप्यपरान्तके ॥ १७१ ॥

स्याच्छाखाद्यर्धमात्राणि तेष्वेवं पातकल्पना ।
अष्टमी विंशिका चैव द्वे शम्ये परिकीर्तिते ॥ १७२ ॥
द्वादशाष्टादशौ तालावेकविंशतिमस्तथा ।
उपोहनं (या ? यथा)मार्गमादावाद्यस्य वस्तुनः ॥ १७३ ॥
कला द्वादश कर्तव्याश्चतस्र इतरादिषु ।
वृत्तिमार्गे प्रयुञ्जीत द्वे वा दक्षिणमार्गके ॥ १७४ ॥
नवाप्युपोहनानि स्युर्मध्ये स्रोतोगतायति ।
तत्रोपवर्तनं कार्यं गते वस्तुचतुष्टये ॥ १७५ ॥
पूर्वातीतनिवृत्तैस्तु पदैस्तदुपपादयेत् ।
पूर्वतुल्यं तु गीत्या स्यादुत्तरे तद् यथा(स्ति ? स्थि)ते॥१७६॥
तस्यान्तेऽर्थसमाप्तिं च न्यासं चाह विशाखिलः ।
एवमेव शिरोन्ते स्यात् प्रतिशाखा ततः परम् ॥ १७७ ॥
शाखावत् प्रतिशाखा च भवेदन्यपदा तु सा ।
तालिकाख्यस्तयोरन्त्यः कलाषट्को निवृत्तिमान् ॥ १७८ ॥
अस्याङ्गेषु यथायोगं योक्तव्ये विविधैकके ।

इति अपरान्तकं समाप्तम् ॥

---

आदावुल्लोप्यकस्याथ मात्राभिपरितै(?)र्युता ॥ १७९ ॥
चतुर्थदशमे शम्ये तालौ तु द्वादशाष्टमौ ।
सन्निपातोऽवसाने च प्रस्तारो यश्चतुष्कले ॥ १८० ॥
मात्रेयं द्विकलेऽपि स्याद् युक्ता पातैर्यथास्थितैः ।
कलाद्वादशकं चात्र वैहायसिकसंज्ञितम् ॥ १८१ ॥

द्विकलैककलोन्मिश्रो युग्मपातैस्तु सप्तभिः ।
कृत्वा प्रवेशनिष्क्रामौ शम्यातालस्तृतीयकम् ॥ १८२ ॥
कुर्यादुत्तमनिष्क्रामसन्निपातश्च पूर्ववत् ।
शम्यादिः सन्निपातान्तः प्रागुक्तैककलोद्भवे ॥ १८३ ॥
शाखेयं प्रतिशा(खे ? खा) च भवेदन्यपदानु(सा ? गा) ।
अस्य संहरणं च स्यादुत्तरे तद्यथास्थिते ॥ १८४ ॥
अन्ताहरणसंज्ञस्तु त्र्यङ्गोऽन्तस्त्रिविधः स्मृतः ।
(त्रि ? वि)विधो युगयुङ्मि(श्रा ? श्र)स्त्र्यंशोऽङ्गैरेभिरिष्यते
[॥ १८५ ॥
स्थितमङ्गं प्रवृत्तं च महाजनिकमेव च ।
तत्र स्याद् (वि ? द्वि)कले चाङ्गे स्थितं त्र्यश्रस्य षट्क-
[लम् ॥ १८६ ॥
निश्शब्दा तु कला तत्र चतु(र्थ्य ? र्थ्यन्य)द्यथोचितम् ।
युक्तमेकक(लो ? ले)नात्र प्रवृत्तं पञ्चपाणिना ॥ १८७ ॥
स्थितवत्तु निवृत्त्यन्तं महाजनिकमिष्यते ।
तत्र स्याद् द्विकले योगे स्थितं चच्चत्पुटाश्रयम् ॥ १८८ ॥
निश्शब्दा पञ्चमी तत्र कला शेषं यथोदितम् ।
निष्क्राम एकः शम्ये द्वे तालादिर्युग्म एव च ॥ १८९ ॥
आहार्यः सन्निपातश्च प्रवृत्तमिह कीर्त्तितम् ।
इद + + निवृत्त्यन्तं परं च स्थितवत्तु तत् ॥ १९० ॥
इति युग्मौजमिश्रत्वा(नु ? दु)भयोर्मिश्रतोच्यते ।
आहुर्युग्मप्रवृत्ताख्यमुद्धट्टाख्यं कलात्रयम् ॥ १९१ ॥

उपवर्तनसंज्ञं तत् प्रवृत्तं कैश्चिदिष्यते ।
अथाङ्गविधिरस्यादौ विविधो मुखसंज्ञितः ॥ १९२ ॥
विविधो वा प्रवृत्तं वा नवप्रतिमुखं भवेत् ।
वैहायासिकमङ्गैः स्यादेकाद्यैः षट्पदैर्युतम् ॥ १९३ ॥
विविधाः स्युरतोऽन्यानि समस्तान्येकका(नि) वा ।
एवमङ्गैरुपाङ्गैश्च विंशत्यंशमिदं परम् ॥ १९४ ॥
षडङ्गमवरं ज्ञेयं तच्च तालसमाप्तिकम् ।

उल्लोप्यकं समाप्तम् ॥

---

अथ वस्तु प्रकर्याः स्यात् षण्मात्रं वा तु शोभितम् ॥
शम्यान्तास्तत्र मात्राः स्युर्द्वितीयान्त्यविवर्जिताः ।
द्वितीयायाश्चतुर्थ्याश्च पञ्चम्याश्च यथाक्रमम् ॥ १९६ ।
ताला गुरुभिराख्याताः षोडशद्वादशाष्टमाः ।
ततो द्वैकलमद्रक्यः कलाभ्यां तास्तु षोडश ॥ १९७ ॥
इति वस्तूनि चत्वारि त्रीणि सार्धान्यथापि वा ।
त्रीणि चार्धानि चेदर्धमादौ दक्षिणमार्गके ॥ १९८ ॥
यदा तदपि वृत्तौ स्यात् पूर्णमेव भवेत् तदा ।
उपोहनं च तत्राद्यं स्मृतं चार्थविवर्जितम् ॥ १९९ ॥
उभयोः पक्षयोस्तत्र कर्तव्ये विविधैकके ।
वस्तुन्यन्त उपान्त्याया मात्रायां गमनान्तरम् ॥ २०० ॥
आसारितं कनीयः स्यादिति सङ्ग्रहणं स्मृतम् ।

प्रकरी समाप्ता ॥

---

अथ नानापदौ पादौ तुल्यगीत्यादिलक्षणौ ॥ २०१ ॥
पृथगोवेणकस्य स्यादपरान्तकवस्तुवत् ।
द्विकलो माषघाताख्यः पञ्चपाणिरतः परम् ॥ २०२ ॥
असमानत्वनित्यत्वे तस्य प्राधान्यकारणे ।
द्वितीया चाष्टमी चैव द्वे शम्ये परिकीर्त्तिते ॥ २०३ ॥
चतुर्थषष्ठनवमास्तालाः शेषं यथोदितम् ।
अपरान्तकवच्चात्र विज्ञेयमुपवर्तनम् ॥ २०४ ॥
ऊर्ध्वं संपिष्टकं वा स्यादुभयत्रापि वा पुनः ।
उपवर्तनवत् सन्धिस्तत्स्थः स्याच्चतुरश्रकः ॥ २०५ ॥
युग्मप्रवृत्तवत् कार्यं सन्धिवद् वज्रसंज्ञितम् ।
संपिष्टकाख्यम(न्त्र ? त्र) स्याद् वैहायसिकसम्मितम् ॥
निष्क्राम एक(त्रि ? स्त्रि)श्शम्यास्त्रितालोऽन्यद् यथोदितम् ।
प्रवेण्यामुप(दद ? पात)श्च द्विकले स्युरिहोत्त(रः ? राः)
[॥ २०७ ॥
उपपाते द्वितीयस्तु तालः कैश्चिदुदाहृतः ।
अन्ताहरणमप्यत्र भवेदन्तसमन्वितम् ॥ २०८ ॥
एवं तु द्वादशाङ्गानि सप्त वास्योपपादयेत् ।
संपिष्टकप्रवेण्यौ च तथा चैवोपवर्तनम् ॥ २०९ ॥
उपपातं च सप्ताङ्गे न प्रयुञ्जीत गीतवित् ।
प्रवृत्तं चावगाढं च प्रवेणोरिह तु क्रमात् ॥ २१० ॥
प्रायः शेषेषु विविध एकैकं चोपवर्तके ।

ओवेणकं समाप्तम् ।

अथार्धान्ते च मात्राणां तालशम्ये यथाक्रमम् ॥ २११॥
चतुर्दश्यां च पञ्चम्यां मात्रायां ताल इष्यते ।
षष्ठी तु मन्द्रकान्त्यावन्मात्रा रोविन्दकस्य तु ॥ २१२ ॥
तत्राष्टकलमाद्याया मात्रायाः स्यादुपोहनम् ।
पूर्ववत् त्रिकलं कार्यमन्यासां प्रत्युपोहनम् ॥ २१३ ॥
पादः पूर्वोऽयमपरस्तद्वदन्यपदः स्मृतः ।
कलास्वष्टासु योऽन्यासु वर्णः पूर्वस्य गीयते ॥ २१४ ॥
स च द्वितीयपादादौ स च प्रस्तार इष्यते ।
द्वितीयपादे प्रस्तारः शरीरद्विकलोत्तरे ॥ २१५ ॥
तत्रोपवर्तनं कैश्चिदिष्यते पूर्ववत्तु तत् ।
तत्रादौ विविधं कार्यं प्रवृत्तमपि वा भवेत् ॥ २१६ ॥
निवृत्तयस्तथा (का)र्या मध्ये(ति ? त्रि)चतुराः स्मृताः ।
अवमर्शो निवृत्ते स्यादुत्तरान्ते च शीर्षकम् ॥ २१७ ॥
अस्यादा(दे ? वे)ककं नित्यं प्रवृत्तं चाप्यतः परम् ।
पादादिषु यथेष्टं च योक्तव्ये विविधैकके ॥ २१८ ॥

रोविन्दकं समाप्तम् ॥

---

अथादावुत्तरस्य स्यान्मुखं प्रतिमुखं तदा ।
उल्लोप्यकवदन्तश्च भवेदनियमस्तु सः ॥ २१९ ॥
द्विकले पञ्च(पाणौ) तु शाखाक्लृप्तिस्तु (पू )र्ववत् ।
तयोर्मध्ये प्रयोक्तव्यं पञ्चपाणौ तु शीर्षकम् ॥ २२० ॥
परा(णि द्वा)दशाङ्गानि (स्युः) का(व्यान्य ? र्याण्य)पराणि
[षट् ।

रोविन्दकवद्त्रान्यत् पादा + + विवर्जितम् ॥ २२१ ॥

उत्तरं समाप्तम् ॥

---

इत्येवमृषिभिर्गीतं सामवेदसमुद्भवम् ।
सप्तरूपमतो जातं गीतजातं पुरा किल ॥ २२२ ॥
तत्र संक्षेपपक्षो यः शममार्गः स उच्यते ।
विस्तरं चात्र + + + + + वयवलक्षणम् ॥ २२३ ॥
तत्र वाद्यादिको भेद उत्तरे खञ्जनत्कुटे ।
तत्रासारितकेष्वादौ शम्यादियुगथोत्तरौ ॥ २२४ ॥
मुक्तिकः सन्निपाता(न्तके ? न्ते क)निष्ठऽथ लयान्तरे ।
मध्यमे द्विकलः कार्यो + + + + चतुष्कलः ॥ २२५ ॥
कार्यः पञ्चक(ला ? लोऽ)न्येषामेकवृद्धमुपोहनम् ।
उत्तरे याः कला अन्त्या नव सप्त दशैव तु ॥ २२६ ॥
क्रमे(ण सौ ? णास्त्र)न्त्ययोः कल्प्यस्तालः प्रथमवस्तुनः ।
आसारितसमूहेन वर्धमानं यथाविधि ॥ २२७ ॥
आवृत्त्या पूर्वगीतानां खण्डिकानां तदुच्यते ।
नवाष्टौ द्विगुणास्ताश्च कलास्तद्विगुणाः क्रमात् ॥
चतस्रः खण्डिका ज्ञेया विद्वद्भिर्वर्धमानके ।
तासामेतानि नामानि विज्ञेयानि यथाक्रमम् ॥ २२९ ॥
विशाला सङ्गता चैव सुनन्दा सुमुखी तथा ।
पञ्चप्रभृत्येकवृद्धाः कलास्ता(सा)मुपोहनम् ॥ २३० ॥
पृथ(क्) प्रयोगे तालश्च कथ्यतेऽयं यथाक्रमम् ।
मध्यमासारिताद्यस्य वस्तुनो यदुदाहृतम् ॥ २३१ ॥

द्विचतुष्कलयुग्मश्च युग्मौजश्च चतुष्कले ।

इति वर्धमानकं समाप्तम् ॥

---

अथादौ पाणिकायाः स्या(द्) मुखं प्रतिमुखं तथा ॥ २३२॥
मात्रा रोविन्दकस्य + + + + लः पृथक् पृथक् ।
आ(रा?का)रेण विदार्यः स्युः केवलेनान्तरान्तरा॥ २३३ ॥
अपि वा नान्तराः कार्या (आकार)पदपूर्विकाः ।
अतः परं शरीरं तु पञ्चपाणिचतुष्टये ॥ २३४ ॥
यथास्थिते प्रयोक्तव्यं शिरस्संपिष्टकैककम् ।
विद्यादुपोहनादीनि मुखादी(नि) यथाक्रमम् ॥ २३५ ॥
(आ)सारितानां तद्वच्च वर्धमानस्य खण्डिकाः ।
अथेहानुक्ततालानां गीतावयवसम्भवः ॥ २३६ ॥
तालः शा + + + + भ्यां संसाध्यो युक्तितः क्वचित् ।
गीतयोऽपि चतस्रस्तु मागध्याद्याः समासतः ॥ २३७ ॥
तत्र स्यान्मागधी चित्रे पदैः समनिवृत्तकैः ।
अर्धकालनिवृत्तैस्तु वर्णाद्या चार्धमागधी ॥ २३८ ॥
वृत्तौ लघ्वक्षरप्राया गीतिः सम्भाविता स्मृता ।
गुर्वक्षरैस्तु पृथुला वर्णाढ्या दक्षिणे सदा ॥ २३९ ॥
मार्गेषु ता यथायोगं चतस्रो गीतयः स्मृताः ।
अथ मार्गा य उद्दिष्टास्तेषां मूलं ध्रुवः स्मृतः ॥ २४० ॥
मात्रिकः स प्रयोक्तव्यः सुविविक्तलयान्वितः ।
ततः स्याद् द्विगुणश्चित्र उत्तरौ द्विगुणोत्तरौ ॥ २४१ ॥
ज्ञात्वैवं सर्वगीतानि सर्वमार्गेषु योजयेत् ।
पूर्वाचार्यमतस्यैतद् दिङ्मात्रं समुदाहृतम् ॥ २४२ ॥

तेषां दृष्टिं समालोक्य समाधेयस्तु साधुभिः ।
वे + + + + + + + मा + + + + + + + + + ॥ २४३ ॥
अकरोद् दत्तिलः शास्त्रं गीतं दत्तिलसंज्ञितम् ॥ २४३½ ॥



इति दत्तिलं समाप्तम् ॥

---

शुभं भूयात् ।

## स्मृताः प्रामाणिकाः


| नामानि. | पृष्ठम्. |
|---|---|
| नारदः | १, ४. |
| आचार्याः | ५, ७, १६. |
| गुरवः | ७, ८, १९. |
| कोहलः | १२. |
| विशाखिलः | १७. |
| ऋषयः | २२. |
| पूर्वाचार्याः | २३. |

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnanaprabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*), | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—**वाररुचसंग्रहः Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—**मणिदर्पणः Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—**मणिसारः Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—**आशौचाष्टकम् Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—**चारुदत्तम् Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—**अलङ्कारसूत्रम् Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—**अध्यात्मपटलम् Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—**प्रतिमानाटकम् Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—**तन्त्रशुद्धम् Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

B41

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣnânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinî of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravi with the commentary Śabdârthadîpikā of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadîpikâ of Śrī Kumāra. | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra (Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

 



| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I — 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II—3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

 

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra) | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

 

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—**नारदीयमनुसंहिता Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—**शिल्परत्नम् Silparatna** (Śilpa) by Śrī-kumāra. | 2 | 8 | 0 |
| No. 99—**मीमांसाश्लोकवार्त्तिकम् Mimamsasloka-vartika** (Mīmāmsa) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—**काव्यप्रकाश: Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāsinī of Śrīvidyācakravartin and Sāhitya-cūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—**आर्यभटीयम् Āryabhaṭīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—**दत्तिलम् Dattila** (Saṅgīta) of Dattila-muni. | 0 | 4 | 0 |

*Apply to:—*

*The Curator*
*for the publication of Sanskrit Manuscripts,*
*Trivandrum.*

B44

## IN THE PRESS.

1. Hamsasandeśa (Kāvya) with commentary.
2. Bālamārtāṇḍavijaya (Nāṭaka) by Devarājakavî.
3. Prakriyāsarvasva (Vyākaraṇa) of Śrī Nārāyaṇabhaṭṭa with commentary.
4. Sāmbapañcāśikā (Stuti) with commentary.
5. Haramekhala (Vaidyaka) of Māhuka with commentary.
6. Ṛksamhitā with the Bhāṣya of Skandasvāmin and commentary of Veṅkaṭamādhava (Part II).
7. Kāvyaratna (Kāvya) of Arhaddāsa.
8. Nidhîpradīpa of Siddhāśrīkaṇṭhaśambhu.
9 Vaikhānasāgama by Marīci
10. Nyāyasārapadapañcikā (Nyāya) of Vāsudeva.
11. Arthaśāstra of Kauṭalya with commentary in Malayalam.
12. Saṅgrāmavijayodaya.
13. Vākyapadīya(Vyākaraṇa) with Prakīrṇakaprakāśa of Helārāja.

---

## UNDERTAKEN FOR PUBLICATION.

1. Āśvalāyanagṛhyasūtra with Devasvāmin's Bhāṣya.
2. Pramāṇalakṣaṇa (Mīmāmsā) by Sarvajñātmapāda.
3. Sarasvatīkaṇṭhābharaṇa (Vyākaraṇa) of Bhōja with Vṛtti of Nārāyaṇa Daṇḍanātha.
4. Śiśupālavadha (Kāvya) with the commentary of Dēvarāja.
5. Śukasandeśa (Kāvya) with the commentaries of Dharmagupta, Gaurīdāsa and Kerala Varmadeva.
6. Pāṇinīyalaghuvivṛti. (Vyākaraṇa).
7 Nāradīyapaddhati (Tantra) with commentary Vivaraṇa of Murāri.

---